# उपशान्त्यष्टकम्

अनुपासादितसुगुरोरविचारितवेदशीर्षतत्त्वस्य ।
कथमुपशान्तिः स्याद्बो सततं सत्सङ्गरहितस्य ॥ १॥

अन्नमयादिषु पञ्चस्वहम्मतिं यावदेष न जहाति ।
तावत्कथमुपशान्तेः पात्रं प्रभवेच्छुकादितुल्योऽपि ॥ २॥

चरतामक्षाश्वानां रूपप्रमुखेषु विषमविषयेषु ।
दोषविमर्शकशाहतिमकुर्वतः स्यात्कथं शान्तिः ॥

तत्त्वावबोधमणिवरभूषणहीनं यदीयहृदयं स्यात् ।
कथमुपशान्तिर्वृणुयात्तं पुरुषं सादरं लोके ॥ ४॥

नक्तन्दिवं पराचि प्रवणस्वान्तस्य देहसक्तधियः ।
कथमुपशान्तिः पुंसः प्रभवेदपि कल्पकोटिशतैः ॥ ५॥

योगाख्यगारुडमनुप्रवरेण कृतो न येन रदभङ्गः ।
तृष्णाकृष्णभुजङ्ग्याः कथमुपशान्तिर्भवेत्तस्य ॥ ६॥

सुतगेहमित्रतरुणीप्रभृतिषु यस्यास्ति दृढतरः स्नेहः ।
स कथमुपशान्तिविषयामपि गाथां गातुमीश्वरः स्याद्बो ॥ ७॥

सन्त्यजति नैव कर्माण्यखिलान्यविगीतमार्गेण ।
सशिखं च यज्ञसूत्रं यः स कथं शान्तिभाजनं प्रभवेत् ॥ ८॥

इति शृङ्गेरि श्रीजगद्गुरु श्रीसच्चिदानन्दशिवाभिनवनृसिंह-
भारतीस्वामिभिः विरचितं उपशान्त्यष्टकं सम्पूर्णम् ।